एताभिः शक्वरीभिः खलु पुरा इन्द्रो वृत्रमसुरं हतवान्। आभिर्वृ-त्रमशकं हन्तुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायते इति निरुकम्। यस्मादेवं तस्मादेकपदाभिर्भुरिजशक्वरीभिः क्षिप्रं पाप्मानं हन्ति विनाशयति। क्षिप्रं शीघ्रं वसीयान् वसुमत्तरः श्रेष्ठश्च भवति ॥ २३ ॥

अथैता एकपदाः 'इन्द्र जुषस्वे'त्याद्याश्च संयुज्य स्तौति—

**चतुस्त्रिꣳशदक्षराः सꣳस्तुतो भवति त्रयस्त्रिꣳशद्दे-वताः प्रजापतिश्चतुस्त्रिꣳशो देवतानां प्रजापतिमेवोप-यन्त्यरिष्ट्यै ॥ २४ ॥**

प्रत्यृचं प्रवह्लिकास्तिस्रस्तिस्र एकपदाः ताश्च संस्तुताः प्रत्यृचं नव-नवाक्षराणि सम्पद्यन्ते। पञ्चाक्षरैः पञ्चभिः पादैः पञ्चविंशत्यक्षराणि सम्पद्यन्ते। ता उभयोर्मिलित्वा प्रत्यृचं चतुस्त्रिंशदक्षरास्संस्तुतः सह स्तुतः सत्रिचतुस्त्रिंशदक्षरात्मकस्समुदायो भवति। तस्याऽऽदितः त्रय-स्त्रिंदशक्षरैः त्रयस्त्रिंशत्संख्याका देवताः प्राप्नोति—अष्टौ वसवः, एकाद-शरुद्राः, द्वादशाऽऽदित्याः, इन्द्रश्च वषट्कारश्चेति। त्रयस्त्रिंशदेतासां देवतानां प्रजापतिश्चतुस्त्रिंशत् संख्यापूरको भवति चतुस्त्रि-शेनाऽक्षरेण चतुस्त्रिंशं प्रजापतिमेवोपयान्ति उपगच्छन्ति अरिष्ट्यै अहिंसायै ॥ २४ ॥

अथोद्गातॄणां षोडशिस्तोत्रसमये हिरण्यधारणं विधत्ते—

**हिरण्यꣳ सम्प्रदायꣳ षोडशिना स्तुवते ज्योति-ष्मानस्य षोडशी भवति ॥ २५ ॥**

हिरण्यं सुवर्णं सम्प्रदायं अन्योन्यस्मै प्रदाय प्रदाय उद्गातारः षोडशिसाम्ना स्तुवते। अस्य साम्नः यां यां भक्तिं यो यो ब्रूते स स हिरण्यं धृत्वा तया भक्त्या स्तुवीतेत्यर्थः। तदुक्तं सूत्रकृता—'यो यस्सा-माङ्गं ब्रूयात् स स हिरण्यं धारयेदि'ति। अत्र सम्प्रदायमिति णमुलप्र-त्ययान्तस्तेन एकमेव हिरण्यं एकैकस्मै गानसमये दातव्यमिति ग-म्यते। 'षोडशिसाम्ना स्तोष्यमाण' इत्यादिना षोडशिस्तोत्राङ्गत्वेन यदुक्तं सूत्रकारेण तत्सर्वमत्राऽनुसन्धेयम्। स्वस्वभक्तिगानसमये उद्गातृभिर्हिरण्यस्य धारणादस्य यजमानस्य षोडशी ज्योतिष्मान् तेजस्वी भवति ॥ २५ ॥

अथैतस्मिन् षोडशिस्तुतिकाले अश्वस्य स्थापनं विधत्ते—

**अश्वः कृष्ण उपतिष्ठति सान्धेक्षयाय भ्रातृव्यलोक-मेव स विषमꣳस्तिष्ठति ॥ २६ ॥**

कृष्णः कृष्णवर्णोऽश्वः सदसः पूर्वस्मिन् परस्मिन्वा द्वारे प्रत्यङ्मुखः प्राङ्मुखो वा उपतिष्ठति यथा उपस्थितो भवति तथा कुर्य्यादित्यर्थः। तदुक्तं सूत्रकारेण–'अश्वः कृष्णः पूर्वस्यां सदसो द्वारि प्रत्यङ्मुखस्तिष्ठेदिति शाण्डिल्योऽपरस्यां प्राङ्मुख इति धानञ्जय्य' इति। किमर्थमश्वस्योपस्थानं साम्येक्ष्याय साम्यमीक्षणं साम्येक्ष्यं साम्यदर्शनायेत्यर्थः। अपि च स उपस्थितोऽश्वः भ्रातृव्यलोकं शत्रुनिवासस्थानमेव विधमन् विविधमुखवायुना अपगमयंस्तिष्ठति ॥ २६ ॥

अथ द्विप्रकारोऽयं षोडशी विहृतोऽविहृतश्च। तत्र विहृतस्य 'इन्द्र जुषस्वे'त्याद्यास्तोत्रीया विहिताः। अविहृते 'त्व सावि सोम इन्द्र त, इत्याद्यास्तिस्रोऽनुष्टुभः स्तोत्रीयाः। अथैतासां अनुष्टुभं स्तोतुमाह—

**एकाक्षरं वै देवानामवमं छन्द आसीत्सप्ताक्षरं परमं नवाक्षरमसुराणामवमं छन्द आसीत् पञ्चदशाक्षरं परमं देवाश्च वा असुराश्चाऽस्पर्द्धन्त तान् प्रजापतिरानुष्टुभो भूत्वांऽन्तराऽतिष्ठत्तं देवासुरा व्यह्वयन्त स देवानुपावर्त्तत ततो देवा अभवन् पराऽसुराः ॥ २७ ॥**

देवानामवमं न्यूनतमञ्छन्द एकाक्षरं एकमेवाऽक्षरं यस्य तथाविधमासीत्। परमं अधिकं छन्दः सप्ताक्षरमासीत्। असुराणान्तु अवमं नवाक्षरमासीत् परमं पञ्चदशाक्षरम्। एवं सप्तभिः छन्दोभिस्सहिता देवाश्चाऽसुराश्चाऽस्पर्द्धन्त। तान् स्पर्द्धमानानुभयविधानन्तरा तेषाम्मध्ये प्रजापतिस्तेषां पिता अनुष्टुभः पादो भूत्वा अतिष्ठत् स्थितवान्। सप्ताक्षरं हि देवानां परमं छन्दः असुराणान्नवाक्षरन्न्यूनं अष्टाक्षरं तूभयसाधारण्येन मध्येऽवस्थितम्। आनुष्टुभः पादश्चाष्टाक्षरः इति तद्रूपो भूत्वा प्रजापतिर्मध्यस्थोऽभवदित्यर्थः। तं मध्ये स्थितं प्रजापतिं देवाश्चाऽसुराश्च व्यह्वयन्त विविधमाह्वयन्। स च देवैरसुरैश्चाऽऽहूयमानः प्रजापतिः देवानुपावर्त्ततोपागच्छत, नाऽसुरान्। ततोऽनन्तरं देवा अभवन् (१)समृद्धा अभवन्। असुराः पराभवन् पराभूताः पराजिताः आसन्। आनुष्टुभेन प्रजापतिना सहायेन देवानामभिवृद्धिर्जातेति अनुष्टुप्समृद्धिहेतुः। अतोऽनुष्टुभस्तोत्रीयाः समृद्धिहेतव इत्यर्थः ॥ २७ ॥

एतद्वेदनं प्रशंसति—

**भवत्यात्मना पराऽस्य भ्रातृव्यो भवति य एवं वेद ॥ २८ ॥**

१. भूष्णवस्समृद्धा इति. क. ख. पु.

गतमेतत् ॥ २८ ॥

अथ देवैः केन छन्दसा आसुरं छन्दोऽपहृतमिति उभयं विविच्य दर्शयति—

ते देवा असुराणामेकाक्षरेणैव पञ्चदशाक्षरमवृञ्जत द्व्यक्षरेण चतुर्दशाक्षरं त्र्यक्षरेण त्रयोदशाक्षरञ्चतुरक्षरेण द्वादशाक्षरं पञ्चाक्षरेणैकादशाक्षरꣳ षडक्षरेण दशाक्षरꣳ सप्ताक्षरेण नवाक्षरमष्टाभिरेवाऽष्टाववृञ्जत ॥ २९ ॥

ते प्रजापतिसहायेन समृद्धा देवाः स्वकीयेनैकाक्षरेणैव छन्दसा असुराणां पञ्चदशाक्षरं यत्परमं छन्दस्तदवृञ्जत अपावर्जयन्। द्व्यक्षरेणात्मीयेन छन्दसा आसुरं चतुर्दशाक्षरं छन्दोऽवृञ्जत । एवमुत्तरत्रापि योज्यम् । अष्टाक्षरस्य छन्दसोऽन्तरालवर्त्तित्वेनोभयसाधारणत्वात् अष्टाभिरेवाऽक्षरैः आसुराण्यष्टाक्षराण्यवृञ्जत ॥ २९ ॥

एतद्वेदनफलमाह—

एवमेव भ्रातृव्याद्भूतिं वृङ्क्ते य एवं वेद ॥ ३० ॥

यथा देवाः स्वकीयैश्छन्दोभिः असुराणाञ्छन्दांसि क्रमेणाऽवर्जयन् एवमेव भ्रातृव्यात् शत्रोः भूतिमैश्वर्यं वृङ्क्ते वर्जयति य एवमुक्तं ब्राह्मणार्थञ्जानाति ॥ ३० ॥

अथ प्रकारान्तरेण तद्वेदनस्य फलमाह—

अपरुद्धयज्ञ इव वा एष यत् षोडशी कनीयस्विन इव वै तर्हि देवा आसन् भूयस्विनोऽसुराः कनीयस्वी भूयस्विनं भ्रातृव्यं वृङ्क्ते य एवं वेद ॥ ३१ ॥

यत् योऽयं षोडशी नाम यज्ञक्रतुः एषः अपरुद्धयज्ञ इव वै। इवेत्यवधारणे । शत्रुभिरवरुध्यमानेन आक्रम्यमाणेन क्रियमाणो यज्ञोऽपरुद्धयज्ञः। तादृश एव खलु । तत्कस्य हेतोः ? तस्मिन् काले असुरैः सह युद्धसमये कनीयस्विनः (१)कनीयांसि एकाक्षरादीनि सप्ताक्षरान्तानि छन्दांसि आसुरेभ्यश्छन्दोभ्यो (२)न्यूनाक्षरत्वात् अल्पीयांसि तद्वन्तो देवाः अल्पा एवाऽऽसन् । नवाक्षरादीनि पञ्चदशाक्षरान्तानि छन्दांसि बह्वक्षरत्वाद् भूयांसि तद्वन्तो असुरा महान्त आसन् । एवञ्च सति अधिकबलैस्तैरुपरुध्यमाना देवाः षोडशिनमाहृत्य (३)तत्रत्येनाऽऽनुष्टुभेन प्रजा-

१. अल्पीयांसीति. क. ख. पु. २. अल्पाक्षरत्वादिति. क. ख. पु.

३. मध्यवर्त्तिनेति. क. ख. पु.

पतिना तानधिकानसुरानभ्यभवन् । तस्मादेष षोडशी अवरुद्धयज्ञ इति य एवं वेद जानाति, स वेदिता कनीयस्वी अल्पीयानपि भूयस्विनं अधिकं भ्रातृव्यं शत्रुं वृङ्क्ते वर्जयति ॥ ३१ ॥

अथ यदुक्तं सूत्रकारेण 'हविर्द्धानं गत्वा षोडशिग्रहमवेक्षेतोद्गाता यस्मादन्य' इति तन्मन्त्रविहितमवेक्षणं विधत्ते—

**"यस्मादन्यो न परो ऽस्ति जातो य आवभूव भुवनानि विश्वा। प्रजापतिः प्रजया सम्विदानस्त्रीणि ज्योतीꣳषि सचते स षोडशी"त्युद्गाता ग्रहमवेक्षते ॥३२॥**

यस्मात्प्रजापतेस्सर्वकारणभूतादन्यो व्यतिरिक्तः परो जात उत्पन्नो नाऽस्ति,यश्च विश्वानि सर्व्वाणि भुवनानि भूतजातानि आबभूव (१)कारणात्मना व्याप्तोऽभूत् । भूप्राप्ताविति धातुः । स प्रजापतिः, प्रजानामीश्वरो देवः प्रजया आत्मीयया, सामान्याभिप्रायमेकवचनम् । स्वात्मनस्स्रष्टव्येन सर्व्वेण(२) कार्य्यजातेन सम्विदानः ऐकमत्यं गच्छन् त्रीणि ज्योतींषि चन्द्रसूर्य्याग्निरूपाणि, अथवा गार्हपत्यदक्षिणाग्न्याहवनीयात्मकानि तेजांसि सचते व्याप्नोति । स एव प्रजापतिः षोडशी षोडशिग्रहात्मना कार्य्यरूपेण वर्त्तत इति मन्त्रार्थः । अनेन मन्त्रेण उद्गाता खरे आसादितं षोडशिग्रहमवेक्षते ॥ ३२ ॥

एतद्वेदनं प्रशंसति—

**ज्योतिष्मानस्य षोडशी भवति य एवं वेद ॥ ३३ ॥**

स्पष्टमेतत् ॥ ३३ ॥

अथ पूर्ववदेतस्मिन् स्तोत्रे स्तोमक्लृप्तिं विधाय (३)स्तौति—

**एकविंश एव स्तोमो भवति प्रतिष्ठायै प्रतितिष्ठति॥३४॥**

पूर्वेषु स्तोत्रेषु यः स्तोमो विहितः स एवैकविंशोऽस्याऽपि स्तोत्रस्य स्तोमो भवति प्रतिष्ठायै प्रतिष्ठानार्थम् । अत एतेनैकविंशेन स्तोमेन (४)स्तुतेन यजमानः प्रतितिष्ठति ॥ ३४ ॥

---

१. कारणत्वेनेति. क. पु. २. कर्मजातेनेति क. पु.
३. प्रस्तौतीति. क. पु. ४. कृतेनेति. क. पु.

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण (१) सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य त्रयोदशः खण्डः॥

द्वादशाध्यायः समाप्तिमगमत्॥



१. सायणामात्येनेति क. पु.

सर्वविधपुस्तकप्राप्तिस्थानम्—
जयकृष्णदास-हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज आफिस,
विद्याविलास प्रेस, बनारस सिटी।